श्री आत्मानंद-ग्रंथ रत्नमाला-पंचचत्वारिंशत्तमं रत्नं (४५)

कासेंद्रगच्छीय श्रीदेवचंद्रसूरि शिष्य श्री देवमूर्ति विरचितम् ।

# रौहिणेय-कथानकम्.

## ( रौहिणेयचरित्रम्. )

---

न्यायांभोनिधि श्रीमद्विजयानंदसूरीश्वर पट्टालंकार श्रीमद्विजयकमलसूरीशोपदिष्ट "वालुकड वास्तव्य शाह गोविन्दजी विठ्ठलदास" इत्यस्य श्राद्धस्य द्रव्यसाहाय्येन.

प्रकाशयित्री—भावनगरस्था-श्री जैन आत्मानन्द सभा.

इदं पुस्तकं भावपुरे वल्लभदास त्रिभुवनदास गांधी सेक्रेटरी-श्री जैन आत्मानन्द सभा.

वीर संवत् २४४२. आत्म संवत् २० विक्रम संवत् १९७२.

॥ अर्हम् ॥

॥ श्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ॥

उपाध्याय श्रीदेवमूर्तिविरचितम्

# रौहिणेयचरित्रम् ।





द्वेषेऽपि बोधकवचःश्रवणं विधाय, स्याद्रौहिणेय इव जंतुरुदारलाभः । क्वाथोऽप्रियोऽपि सरुजां सुखदो रविर्वा, सन्तापकोऽपि जगदंगभृतां हिताय ॥ १ ॥ तद्यथा—अस्त्यत्र मगधे देशे गंगापारे मनोहरे । पुरं राजगृहं नाम्ना महर्द्धिनरभूषितं ॥ २ ॥ तस्योपकंठे वैभारगिरिः सानुमनोरमः । चौराणां च मुनीनां च विश्रामस्थानकं सदा ॥ ३ ॥ स पर्वतो वनस्पत्या भाराष्टादशसंख्यया । विराजितो निर्झरैश्च मुक्ताहारैरिवाद्भुतैः ॥ ४ ॥ शब्दायन्ते दिवा यत्र व्याघ्रसिंहाः सहस्रशः । शिवानामपि फेत्कारैर्भीषणो घूकघूत्कृतैः ॥५॥ चौराणां शिशवस्तत्र रमन्ते सिंहशावकैः । बलेन मंत्रयंत्राणामौषधीनां च नित्यशः ॥ ६ ॥ वसंति मुनयोऽनेके

वनेषुपरितो गिरिम् । कन्दमूलफलाहाराः कुर्वन्ति विविधं तपः ॥७॥ या गुहा मध्यवर्त्तिन्यो वंशजालैः परिवृताः । वसंति तत्र चौराणां कुलानि शतसङ्ख्यया ॥ ८ ॥ उत्कृष्टः सर्वचौराणां मध्यगश्चौरविद्यया । चौरो रूप्यखुराह्वानो भृशं साहसिको धनी ॥ ९ ॥ पादयोः परिधत्ते स तस्करो रौप्यपादुके । स्वच्छन्दलीलया तत्र पर्वते पर्वति भृशं ॥ १० ॥ राजा राजगृहे राज्यं विदधाति प्रसेनजित् । निर्भीतिर्वैरिहंतापि पुनश्चौरातिशंकितः ॥ ११ ॥ गेहे गेहे भ्रमन् रात्रौ चौरो रूप्यखुरः सदा । यद्यत्सुखायते चित्ते तत्तत्प्रकुरुते ध्रुवं ॥ १२ ॥ कलितास्तेन चौरेणारक्षकाः सकला अपि । गेहे गेहे नवद्वारं स रात्रौ कुरुतेऽनिशं ॥ १३ ॥ याति पक्षिवदुड्डीय मठप्राकारमंदिरान् । शस्त्राणि राजपुत्राणामाच्छिनत्त्यपि पश्यतां ॥ १४ ॥ कथयित्वा खनेद्वर्त्तां दत्वावस्वापिनीमपि । याति जागरयित्वा सोऽकलनीयश्च दुःसहः ॥ १५ ॥ स जानात्यनीकाबंधं धाराबंधं मलिम्लुचः । न तस्य लगते घातो विधत्ते किं नराधिपः ? ॥ १६ ॥ आजुहाव नृपश्चौरं तं दत्वा शपथान् बहून् । अवीवदच्च मधुरभाषया स नरेश्वरः ॥ १७ ॥ अस्मिन् पुरे त्वं विनाशं मा कार्षीर्जातु मित्र भोः ! । अस्मद्दत्तं वरं ग्रासं गृहाण त्वं खलु स्थिरं ॥ १४ ॥ तस्य ग्रासः कृतः कीदृक् शुल्कहट्टे विंशोपकः । वसन्नेको वरो ग्रामो द्रुमकश्च गृहं प्रति ॥ १९ ॥ समं तेनेति चौरेण सन्धिर्जज्ञे क्षमाभुजः । उद्घाटितेन द्वारेण जनः शेतेऽतिनिर्भयः ॥ २० ॥ अथ प्रोवाच पितरं रहो रूप्यखुरात्मजः । परिधाप्ये त्वया तात ! नाऽथो रजतपादुके ॥ २१ ॥ शक्यते चौरिका कर्त्तुं नात्मभिर्भूपसीमनि । घृष्ट्वा वृथा याति रौप्यं पादुकेऽयोमये कुरु ॥ २२ ॥ इत्थन्तु तद्वचः श्रुत्वा सर्वश्चौरपरिच्छदः । हसन्नुवाच लौभ्येष चौरेश ! तव नंदनः ॥ २३ ॥ अभिधा तस्य तैर्दत्ता ध्रुवं लोहखुरो ह्ययं । पितृवत्सोऽप्यभूच्चौरविद्यानां केलिमंदिरं ॥ २४ ॥ मृतो रूप्यखुरो राजगृहे कोऽपि कदाप्यथ । चौरनाम



न जानाति जनोऽतिसुखितः सदा ॥ २५ ॥ सर्वे ग्रासाः समायान्ति तल्लोहखुरमन्दिरे । गुणेन तेन देशेऽपि सर्वो गतभयो जनः ॥ २६ ॥ गेहे लोहखुरस्यापि रोहिण्या सुषुवे सुतः । भव्यलग्नेऽतिगुणवांस्तेजोभिर्भास्करोपमः ॥ २७ ॥ पुरो मौहूर्त्तिको लोहखुरस्येत्यवदद्वचः । लग्नप्रमाणतो नैष चौरः प्रांतेऽतिधार्मिकः ॥ २८ ॥ वन्दिष्यतेऽसौ भूनाथस्वर्णाथैर्दानवैरपि । रौहिणेयोऽभिधानेन ज्ञास्यतेऽपि जगत्त्रये ॥ २९ ॥ परोपकारी धर्मात्मा दयालुर्भवभीरुकः । विद्यासु निपुणः प्रौढो भवन्नेष भविष्यति ॥ ३० ॥ वचः सांवत्सरस्येति श्रुत्वा लोहखुरोऽपि सः । हृदि हर्षविषादाभ्यामपूरिष्ट समंततः ॥ ३१ ॥ यदा प्रसूतो रोहिण्याः पुत्रो राजगृहे तदा । श्रेणिकोऽपि समायातो वेनातटपुरात्त्वरं ॥ ३२ ॥ ललौ प्रसेनजिद्दीक्षां राजा श्रीश्रेणिकोऽभवत् । गुहायां वर्द्धते चौरकुमारो रौहिणेयकः ॥ ३३ ॥ संजज्ञे सोऽष्टवर्षीयः पठति स्म कलाः कलाः । पंडितस्यापि सन्देहानुत्पादयाति बुद्धिभिः ॥ ३४ ॥ स्वशब्दस्य परावर्त्तः क्रियते येन केनचित् । तदन्वशासीत्तच्चापि येन रूपान्तरं भवेत् ॥ ३५ ॥ विद्या जानाति सर्वेषां वर्त्तकानां मनोहराः । ददाति निर्णयं भाषारागाणामपि कोविदः ॥ ३६ ॥ याति पक्षिवदुड्डीय क्षणेन व्योम्नि तस्करः । क्षणाद्विहाय स्वं रूपं भवेत् श्वापदरूपभाक् ॥ ३७ ॥ विदधत्प्रौढनादं च फलान्यात्ति घनान्यपि । आरुह्य भूरुहान् सर्वान् सार्द्धमर्जुनकेतुभिः ॥ ३८ ॥ मृगाणां मध्यगः क्रीडां करोति कमलाननः । विधाय रूपम्मायूरं नरिनर्त्त्यम्बुदागमे ॥ ३९ ॥ तरणं तारणं गंगानद्यां तेन च शिक्षितं । पश्चादपि हि संसारसागरं स तरिष्यति ॥ ४० ॥ एवं कलानां हेतोः स यत्र तत्रापि संचरन् । जानीतः पितरावेवं स्वच्छन्दं रमतेऽर्भकः ॥ ४१ ॥ औषधानि विचित्राणि मंत्रयंत्रांश्च कोटिशः । स जानाति परं नैव हिंसाकर्म मनागपि ॥ ४२ ॥ स्वयं कमपि नो हन्ति हिंसकांश्चापि वारयेत् ।

रौहिणेयो लुब्धकाना क्षणात्पाशांशांश्छिनत्त्यपि ॥ ४३ ॥ छित्त्वा नष्टो याति वेगाद्यतीनां चाश्रमेषु सः । धर्मोपदेशं ते तस्य ददते
च शृणोत्यसौ ॥ ४४ ॥ जनको रौहिणेयस्यान्यदा स्वीयपरिच्छदात् । श्रुत्वात्मजस्य चरितं पुत्रमाजूहवत् स्वयं ॥ ४५ ॥
पुरः स्थितं लोहखुरो रौहिणेयं तमूचिवान् । विनाशयासि वत्स ! त्वं गृहसूत्रं न संशयः ॥ ४६ ॥ हसन्नूचे रौहिणेयः पितरं
लीलयेव हि । आजन्मतोऽपि मयका सूत्रं नोच्चालितं पितः ! ॥ ४७ ॥ मार्गं न पूर्वजाचीर्णं भजासि त्वं मनागपि । गृहसूत्रमिदं
वत्स ! सूत्रं नो कर्त्तनोद्भवं ॥ ४८ ॥ अस्माकं भवने जातो जीवघातं करोषि न । नाचरेर्मदिरापानं चिखादिषसि नो पलं
॥ ४९ ॥ किं ममैभिर्निरीक्षेथा ? उपास्मास्वभवद्भवान् । अस्मच्छिक्षां न कुरुषे स्वल्पामपि हि जातुचित् ॥ ५० ॥ गच्छद्भिर्वा-
सरैनूनं भिक्षां याचिष्यसे जनं । सांवत्सरेण यत्प्रोक्तं तद्भोभोति किमन्यथा ? ॥ ५१ ॥ किं तवाग्रे बहूक्तेन ? सारं वाक्यमतः
शृणु । चलास्माकं मनोवृत्त्याथवा हत्यां गृहाण मे ॥ ५२ ॥ असुखानां निधिर्द्यूतं द्यूतं कलहमन्दिरं । कुलशीलहरं द्यूतं तेन
दिव्याम्यहं कथं ॥ ५३ ॥ मद्याद्भवति वैकल्यमपावित्र्यं तथैव च । न तिष्ठेज्जठरे धान्यं तत्पिबामि कथं ? पितः ! ॥ ५४ ॥
यैः श्वापदैः समं क्रीडां करोमि विपिनेऽन्वहं । तेषां मांसानि हत्वा तान् तात ! खादाम्यहं कथं ? ॥ ५५ ॥ कुलक्रमसमायातं
स्तैन्यं चेन्न करोम्यहं । ततो यूयं प्रकुर्याच्च मत्सरं हि ममोपरि ॥ ५६ ॥ रौहिणेयस्य वाक्यानि श्रुत्वेति मुमुदेतरां । पुत्रं
लोहखुरो दोर्भ्यामालिलिंग पुनः पुनः ॥ ५७ ॥ हृष्टश्चित्ते पुनः प्रोचे चौरराट् निजमात्मजं । शिक्षामेकां वत्स ! कुर्यास्त्वं मे :
कुलहितावहां ॥ ५८ ॥ धर्मधूर्त्तो धरापीठे श्रीवीरो विश्वविश्रुतः । स्वर्णरत्नरौप्यमयं कुर्याद्वप्रत्रयं सदा ॥ ५९ ॥ तत्रागतांश्च
विश्वस्तान् सर्वजातिसमुद्भवान् ॥ किंचित्किंचित् समाख्याय स जनान् विप्रतारयेत् ॥ ६० ॥ ते विप्रतारिताः संतस्त्यक्त्वा



जार्बागजानपि । भवेयुः सर्वविषयव्यापारेषु पराङ्मुखाः ॥ ६१ ॥ तल्लक्ष्मीग्रहणे क्षोभं मा कार्षीस्त्वं मनागपि । प्रहीतुं
शक्यते कैश्चिद्व्यक्तापि न हि सा जनैः ॥ ६२ ॥ अंधीभवेः सदापि त्वं वत्स ! तन्मुखवीक्षणे । तद्वचः श्रवणेऽकर्णस्त्वं
चेद्भक्तः पितुरथ ॥ ६३ ॥ कार्येऽमुष्मिन् वचोबंधं विधेहि मयका समं । तातादेशः प्रमाणं मे रौहिणेयोऽप्यदोऽवदत् ॥६४॥
कियद्भिर्वासरैर्लोहखुरः पञ्चत्वमाप्तवान् । ग्रासास्तथैव ते तस्य समायान्ति गुहागृहे ॥ ६५ ॥ ये चौरा रौहिणेयस्य सन्त्यन्ये
परिपन्थिनः । चौरपञ्चत्ववार्त्ता तेऽभयं लेखादजिज्ञपन् ॥ ६६ ॥ लेखमध्येऽस्ति लिखितं ज्ञातास्माभिर्मतिस्तव । तदात्मजस्य
शावस्य यद् ग्रासं यच्छसि स्वकं ॥ ६७ ॥ वैद्यैश्चिकित्स्यमानोऽस्ति स्वामी वो रोगपीडितः । तेन स्थ यूयमाहूतास्तत्र च
व्रजत द्रुतं ॥ ६८ ॥ आगच्छत पुनर्यूयं जाते तस्मिन्निरामये । मृते पुनर्नवं ग्रासं करिष्यति च वो नृपः ॥६९॥ ज्ञात्वा लेख-
समाचारमभयेनेति वाक्यतः । जना लोहखुरस्याथोत्थापिताः शुल्कहट्टतः ॥ ७० ॥ ते गत्वा कंदराद्वारे निखिलाः खिन्न-
मानसाः। रोहिण्यपि रुरोदोच्चैर्वीक्ष्य तांश्च समागतान् ॥ ७१ ॥ रौहिणेयप्रसूः स्थित्वा रुदन्ती तानभाषत । ग्रासं विहाय
किं यूयमायाता अत्र कंदरे ॥ ७२ ॥ वाक्प्रपञ्चं विधायेत्यभयेन प्रहिता वयं । समाकर्णय नो वाक्यं मातरेकमथो हितं
॥ ७३ ॥ मिलिष्यत्यवनीभर्त्तुर्भवत्या यदि नंदनः । तत्पालयिष्यति ग्रासमन्यथा नैव भूधवः ॥ ७४ ॥ तेषां वचांसि
श्रुत्वेत्यरुदत्सा रोहिणी पुनः । गृह्णन्तीति गुणान् भर्त्तुः परासोः प्रौढया गिरा ॥ ७५ ॥ त्वां विनेयं भवद्भार्या निराधारा
रटत्यहो ! । एकवारं स्वकीयं तद्दर्शनं देहि वल्लभ ! ॥ ७६ ॥ भूमौ पंचाननस्याद्य कुरंगा विचरंत्यहो ! । भानवोऽद्य गता
भानोस्तमसः प्रसरोऽभवत् ॥ ७७ ॥ अद्यासने मृगपतेर्ददुः पारापताः पदं । परेषां तस्कराणां यद्वचनावसरोऽजनि ॥ ७८ ॥

गिरेर्मूले गुहा गुर्वीराकलय्य स्वचेतसा । प्रकटीभविता भर्त्तः ! त्वां विना कोऽद्रिमस्तके ॥ ७९ ॥ दिवाप्यज्ञातमार्गाणां निशीथे भवता विना । दरीणां श्वापदैः शब्दैर्मार्गे ज्ञाताद्य कः प्रिय ! ॥ ८० ॥ दुर्गस्याधो मठस्याधः स्वीयबाहुबलेन च । त्वां विना वद चौरेंद्र ! सुरंगां कः प्रदास्यति ॥ ८१ ॥ प्राकारकपिशीर्षेभ्यो हयानुत्तार्य हेलया । गंगाजलं तारयित्वान-यद्गंगाजलाद्भवान् ॥ ८२ ॥ प्र(द)धानस्यायसः खंडं ममाशा तस्य कीदृशी । अपूर्वेण भयेनाद्याप्यारभ्य कलितो हि यः ॥ ८३ ॥ यो हि भाग्यवतां ग्रासः सोऽगमत्तानतु ध्रुवं । मूलिकां वह काष्ठानामथ त्वं रौहिणेयक ! ॥ ८४ ॥ सोचे प्रति पुनः पुत्रं सर्वेषामपि शृण्वतां । स्ववंशस्य समाचारं शृणु वत्स ! समाहितः ॥ ८५ ॥ यद्यपि स्वर्णकोट्येका तस्कराणां गृहे भवेत् । नर्त्ते तथापि मुषितं द्रव्यं नव्यं हि स्थीयते ॥ ८६ ॥ अर्जयिष्यसि यद्द्रव्यं त्वमाशा तस्य कीदृशी । ग्रासाः पितामहस्यापि यद्ययुर्जीवतस्तव ॥ ८७ ॥ तव स्थाने न किं जाता पुत्र्येका प्रियलक्षणा । वंध्या बभूव किं नाहं त्वया पुत्रेण को गुणः ? ॥ ८८ ॥ स्वमातृवचनैरेवं प्रोत्कृष्टश्चौरविद्यया । प्रमोदभाक् रौहिणेयश्चिंतयामास चेतसि ॥ ८९ ॥ अजातेनाथ जातेन तेन पुत्रेण को गुणः ? । भूर्नरैर्यस्य तातस्य जीवतोऽपि हि गृह्यते ॥ ९० ॥ अहं पुत्रो जीवतो मे वप्तुर्ग्रासोऽखिलो ययौ । ब्रूते न्यायेन मातासौ दोषोऽस्याः कोऽपि न ध्रुवं ॥९१॥ ध्यात्वेति निःससारासौ क्रीडां कुर्वन् गुहागृहात् । लघूष्ट्ररूपं चक्रे च मंत्रशक्त्या महत्तरः ॥ ९२ ॥ पुरप्रतोलीमारुह्य चिरं स्थित्वोष्ट्ररूपभाक् । प्रौढप्रासाद आसीनो गीतं गायति निर्भरं ॥ ९३ ॥ गीतमध्ये वदत्येवं रे प्राहरिक ! जाग्रहि । चिंतय श्रीहरं चौरं पुरमध्ये समागतं ॥ ९४ ॥ यो रौप्यखुरपुत्रोऽभूच्चौरो लोहखुराह्वयः । तत्पुत्र उष्ट्ररूपोऽहं चौरविद्याबलोत्कटः ॥ ९५ ॥ दृष्टा यैर्मत्पितुर्ग्रासा रासकान् दापयंति ते । अभ्यासा

अस्मदंगेऽप्यन्यायस्यैव स्वभावतः ॥ ९६ ॥ पुरमध्येऽधनो लोको निःश्वासांस्तु विमुंचति । भूपतेः सकलो दोषः सोऽभय-स्यापि मंत्रिणः ॥ ९७ ॥ मां मा जानीत करभमहं तस्करशेखरः । वैभारगिरिवास्यस्मि बहुसंतापकारकः ॥ ९८ ॥ लुप्यते प्राशनं यस्य जीवतोऽनुक्रमागतं । तदीयवदनं दृष्ट्वा जलं पिबति कः क्षितौ ? ॥ ९९ ॥ ज्ञास्यते सकला बुद्धिरभयस्यापि मंत्रिणः । राज्ञः परिच्छदस्यापि शक्तिः स्थाम च सांप्रतं ॥ १०० ॥ इत्यर्थगर्भं तद्वाक्यं सर्वे शृण्वन्ति मानवाः । प्रदीपदीप्र-धवलगृहे राज्ञश्च वल्लभाः ॥ १०१ ॥ शनैः शनैस्तं परितोऽमिलच्च बहुलो जनः । स उड्डीय ततः स्थानान्महिषी वाटकान् ययौ ॥१०२॥ तद्रुपं सहसा दृष्ट्वा पुरसंकीर्णस्थानके । महिष्यो युगपत्त्रस्ताः प्रौढनादभयाकुलाः ॥१०३॥ ये येऽभवन्माहिषिणां वाटकास्तत्र सोऽगमत् । अन्वेति कांदिशिकाश्च ता रटन् पुरमध्यतः ॥१०४॥ पुरमध्येऽतिसंकीर्णे महिषीपातिताज्जनात् । धाटी-पातादपि प्राज्योऽभवत्कोलाहलो महान् ॥१०५॥ तदा श्रीश्रेणिकक्ष्मापोऽभवद्वातायनास्थितः । तदोष्ट्रोऽपि समायातोऽनुव्रजन्म-हिषीव्रजान् ॥१०६॥ महिषीस्वामिनोऽप्ीयुस्तत्र श्वाससमाकुलाः । आरक्षकोऽस्ति तन्मध्ये मुख्योऽसिव्यग्रहस्तकः ॥१०७॥ त्यक्त्वोष्ट्ररूपं सहसाच्छिद्यारक्षकरादसिं । अभजद्रौहिणेयः सोऽदृश्यभावं क्षणादपि ॥१०८॥ तत्रेति क्रीडतस्तस्य भानोरप्यु-दयोऽभवत् । स तिष्ठन् जनमध्येऽपि न कैश्चिदपि बुध्यते ॥१०९॥ क्रीडता रौहिणेयेन कलितोऽभयमंत्रिराट् । नालक्षि त्वभ-येनाथ रौहिणेयः स चौरराट् ॥११०॥ अध्वानो महिषीरुद्धा मर्त्यकोटिसमाकुलाः । न कोऽपि तेन कुत्रापि गंतुं क्रममपि क्षमः ॥१११॥ गच्छता तेन चौरेण प्रणम्याभयमंत्रिणं । ऊचे लोकोऽल्पमपि मे मा करोतु भयं स्फुटं ॥ ११२ ॥ राजानं राजपुत्रं च मंत्रिणं दंडपाशिकान् । नटिष्याम्यनिशं रात्रौ रात्रावागत्य लीलया ॥११३॥ इत्युक्त्वा स ययौ तेषां पश्यतामपि

चौरराट् । जग्मिवान् कोऽपि न पृष्टे सर्वकोपि जिजीविषुः ॥ ११४ ॥ पिधाय कर्णौ पाणिभ्यां तातादेशं प्रमाणयन् । वीरस-
मवसरणं दृष्ट्वा चात्युत्सुकोऽचलत् ॥ ११५ ॥ चरणे चरतस्तस्य तीक्ष्णो भग्नश्च कंटकः । शशाक तेन नो गन्तुं स एककमपि
क्रमं ॥११६॥ एकेन पाणिना कर्णं पिधाय त्वरितं ततः । द्वितीयेनोद्धारासौ कण्टकं पादतो निजात् ॥११७॥ गंभीरध्वनिना
प्रौढं श्रीवीरस्य जगद्गुरोः । रौहिणेयोऽशृणोद् वाक्यं व्याख्यानं कुर्वतस्तदा ॥११८॥ महीतलास्पर्शिपादा निर्निमेषविलोचनाः ।
अम्लानमाल्या निःस्वेदा निरुजांगाः सुरा इति ॥११९॥ बहुश्रुतमिदं धिग्धिगित्याशूद्धृतकण्टकः । पिधाय कर्णौ पाणिभ्यां
तथैवापससार सः ॥ १२० ॥ बहुमूल्यं वीक्षमाणस्तत्खड्गं गृहमाप्तवान् । प्रणम्य जननीं प्रोचे कुरु शांतं मनस्तव ॥१२१॥
मातरारक्षककरात् खड्गमेतन्मया हृतं । पितुः प्रयोजनस्यार्थे त्वच्चित्तधृतिहेतवे ॥१२२॥ न्युंछनानि विधायाशु प्रदीपं सप्तव-
र्त्तिभिः । विधाय तिलकं माता पुत्रायेत्याशिषं ददौ ॥१२३॥ कुलदीप ! कुलाधार ! वंशद्वयविभूषण ! इत्थमेव सदा क्रीडेस्त-
त्पुरे सप्तवर्त्मसु ॥ १२४ ॥ स्तनंधयोऽसि त्वं वत्स ! मृत्युशंकां तु मा कृथाः । तथा कुर्या यथा चंद्रेऽभिधां स्वां लेखयेद्द्रुतं
॥ १२५ ॥ मृते त्वयि न मे शोकः शंका त्वद्धरणे पुनः । धृतश्चेत्तद्गता कीर्तिः पैत्री पैतामही पुनः ॥ १२६ ॥ रणे चेद्वीक्षिते
वत्स ! कांदिशिकोऽभवद्भवान् । कुलं त्वया ततो वप्तुर्मदीयं च विगोपितं ॥१२७॥ सिंहीकुक्षौ सिंहवंशे यद्युत्पद्येत जंबुकः ।
धिक् धिक् तं कातरं दीनं जीवितं तस्य च वृथा ॥१२८॥ सहकारतरोरालवाले चेत्किंशुकोद्भवः । कृष्णवक्त्रमुखात्तस्मात् फलाशा
वद कीदृशी ? ॥१२९॥ राजा वा युवराजो वा मंत्री वा दंडपाशिकः । नीता भवंति चेत्खेदं ततो वैभारमापतेः ॥ १३० ॥
पितुः प्रयोजनं कृत्वा नत्वा च जननीक्रमौ । मातुः शिक्षां गृहीत्वा चाचलद्भूयः स चौरराट् ॥१३१॥ सुवर्णनरवद्देदीप्य-

मानतनुदीधितिः । धरागताहर्मणिवद्दुरालोकश्च तेजसा ॥ १३२ ॥ शारदपूर्णिमाचंद्रवक्त्रविस्मापितव्रजः । तिलप्रसूननासश्च
खंजरीटोपमांबकः ॥ १३३ ॥ वाक्यपीयूषकुंडाभवक्त्रपार्श्वस्थितेन च । पन्नगाकृतिना वेणीदंडेनापि विराजितः ॥ १३४ ॥
सांप्रतं चौरमुख्योऽयं पश्चात्पुण्यवतामपि । राजतेऽतीव पुंड्रेण भृशं संशोभितालकः ॥१३५॥ दाडिमीफलबीजाभदंतश्रेणिर्मनो-
ज्ञवाक् । कंबुग्रीवः पीवरांसः पृथुवक्षाश्च सत्ववान् ॥१३६॥ युगोपमभुजः शंखचक्रांकितकरद्वयः । कुलिशाकृतिमध्यश्च रौहिणेयो
प्रसन्नधीः ॥ १३७ ॥ गूढगुल्फो मृगजंघः पद्माकृतिपदद्वयः । गुंजापुंजप्रभापूरविराजितनखक्रमः ॥१३८॥ सुवेषः सरलः शांतः
सुप्रसन्नः सदाकृतिः । शौंडीरः साहसी शूरः समर्थः समरेऽभयः ॥ १३९ ॥ रागज्ञो रूपवान् रम्यरामारागनिकेतनं । रौहिणे-
योऽरातिजेता पुरे राजगृहेऽविशत् ॥१४०॥ नवभिः कुलकं ॥ क्रीतं द्रव्येण धवलगृहमेकं मनोरमं । सुधाधवलितं सप्तभूमिकं भूरि-
भूषणं ॥ १४१ ॥ वृद्धा तत्र युवत्येका क्षामकुक्षिर्बुभुक्षया । प्रतिपन्नांबिकात्वेन कृता च गृहरक्षिका ॥ १४२ ॥ वैभारपर्वते पूर्व-
पुरुषोपार्जितं धनं । कल्यप्यानाययामास स्वर्णरूप्यादिकं रहः ॥ १४३ ॥ वाणिज्यं मंडितं तेन द्रव्येण प्रकटं पुरे । अमंडयच्च
स द्रव्यहीनान् दत्वा निजं धनं ॥१४४॥ वाहनानि च पूर्यन्ते शतसंख्यानि सागरे । प्रयान्ति दिक्षु सर्वासु वस्तुपूर्णान्यनांसि
च ॥१४५॥ सितोदरेणेव तेन जनतानां यदृच्छया । लक्षसंख्यानि दीयंते व्याजेन द्रविणानि च ॥१४६॥ दुःखान्यनाथदुःस्थानां
दीर्यंते तेन हेलया । वैरिणोऽपि हि रक्ष्यंते राज्ञश्च शरणागताः ॥ १४७ ॥ दीयन्ते चार्थिसार्थेभ्यः पट्टकूलतुरंगमाः । दारिद्र्यं
निर्धनानां च दीर्यंते धनदानतः ॥१४८॥ व्यवहारी रौहिणेयः ख्यातोऽभूदिति तत्पुरे । इत्थं प्रकारैः सकलैरर्जयच्च घनं धनं
॥ १४९ ॥ उत्तीर्णा चौरिका चित्ताद्वाणिज्ये ललगे मनः । वाणिज्येनार्ज्यते यत्स्वमन्योपायैर्घनैर्न तत् ॥ १५० ॥ लाभलोभेन

वाणिज्यं एवंकुर्वन्निरन्तरं । बहूनां स पिपर्त्तिस्म रौहिणेयो मनोरथान् ॥ १५१ ॥ गतेषु पट्सु मासेषु स्तैन्यसंस्मृतिकारकाः ।
अमिलन् कथयाञ्चक्रे तैश्चारक्षकचेष्टितं ॥ १५२ ॥ त्वयका चौरिकात्याजि निश्चिन्तो दंडपाशिकः । चौरघरट्टमात्मानं कथयत्येष
बन्दिभिः ॥ १५३ ॥ रौहिणेयो निशम्येति ध्यातवान्मानसे निजे । यावदेतान् दिनान् सेहे अद्यपश्चात्तु नो सहे ॥ १५४ ॥
आरक्षकस्याद्य मया गेहद्वारं नवं निशि । कर्त्तव्यमिति स ध्यात्वा प्रेषयामास तान्नरान् ॥१५५॥ आरक्षकगृहे क्षात्रमर्धरात्रे प्रदाय
सः । सर्वस्वं जगृहे शीघ्रं मुक्तं यात्वा स्ववेश्मनि ॥१५६॥ श्रेणिकस्याश्वरत्नं चापहृत्यातीववेगतः । बीभत्सते स्म तत्क्षात्रद्वारे
चौरावतंसकः ॥१५७॥ गत्वा जागरयामास पांडवांश्चापि यामिकान् । उत्तिष्ठतार्थयत भोस्तुरंगं दंडपाशिकं ॥१५८॥ यामिकाः
सहसोत्थायानिरीक्ष्यापि च वाडवं । पदं निरीक्षितुं लग्नाः कृत्वा दीप्रप्रदीपिकाः ॥ १५९ ॥ आरक्षकगृहेऽगच्छत् पदस्तुरग-
संभवः । कोलाहलं प्रकुर्वाणा मिलिता अश्वयामिकाः ॥१६०॥ एतावतापि ग्रासेनामुष्य वांच्छा न पूर्यते । ततो हरति भूपस्या-
श्वरत्नमिति वादिभिः ॥ १६१ ॥ सुप्तश्चतुरके दंडपाशिकस्तैः क्रुधोद्धतैः । धृतस्तत्रैव तुरगेऽश्ववारश्च कृतो द्रुतं ॥१६२॥ प्रभाते
पुरतो राज्ञः स चानीयत पांडवैः । यथा रजोत्सवे लोकैरजोत्सवनरेश्वरः ॥ १६३ ॥ सचिवेनाभयेनोचे न चौरो घटते ह्ययं ।
विचारयोग्यं किमपि कारणं स्थूलमस्ति भोः ॥ १६४ ॥ यावत्तत्कारणं वेद्मि नाहं सम्यक् प्रकारतः । युष्माभिर्न विधातव्यः
कलिस्तावत्सभांगणे ॥१६५॥ आरक्षको गृहे यातो वाक्येनाभयमंत्रिणः । गृहिण्या भणितः स्वामिन् किमर्थं ! गृहमागतः॥१६६॥
तुरंगस्य मिषेणैतैः पांडवैस्तव मन्दिरं । लुंटितं सकलं नास्ति तद्यदन्तेषु दीयते ॥१६७॥ पाण्डवान् धृत्वा हन्म्यद्य सकलान्
निशितासिना । ययौ तुरंगशालासु तलारक्षो भणन्निति ॥१६८॥ रे रे चौर! तलारक्ष! तिष्ठास्माकं पुरः स्थिरः । एवं ब्रुवन्तः

शस्त्राण्यादायोत्तस्थुश्च पांडवाः ॥ १६९ ॥ रे वराक ! भवान् दासस्ते चामी पांडवा वयं । जगत्त्रयेऽपि विख्यातं विहितं भारतं
हि यैः ॥ १७० ॥ कुर्युः शस्त्राणि झात्कारं पक्षयोरुभयोरपि । अभयो धीसखो भूयः कुरुते स्म निवारणं ॥१७१॥ तेषां प्रति-
भुवो गृह्णन् मंत्री कलिकृतौ पुनः । चौरं न वीक्षते क्वापीत्यधर्षदंडपाशिकं ॥ १७२ ॥ लोकास्थानं समासीनो मूर्छयोश्च वलं
क्षिपन् । आरक्षको जनश्चास्ति तस्करोऽपि पुरः स्थितः ॥ १७३ ॥ चेच्चटिष्यति हस्ते मे कथमप्येष तस्करः । व्यपोहिष्यामि
तद्रोषं भव्यरीत्या स्वचेतसः ॥ १७४ ॥ स नातिष्ठत्पापमतिर्लुंटितेन गृहेण मे । वैरं तु कारयामास मयका सह पांडवैः
॥ १७५ ॥ एवं विभाषमाणं तं निरीक्ष्य जनताग्रतः । रौहिणेयो जहासोच्चैरुदडीयत पक्षिवत् ॥१७६॥ जगृहे गच्छता तेन
तलारक्षकमस्तकात् । पट्टकूलं च भूपेन प्रदत्तं शीर्षवेष्टनं ॥ १७७ ॥ प्रासादशृंगमारुह्य बभाषेऽथातिनिर्भयः । विभाषसे किं
वराक ! ज्ञातं स्थाम मया तव ॥१७८॥ तव खड्गं मया छिन्नं अग्रेऽपि तव हस्ततः । मयैव पातितं क्षात्रं मंदिरे तव कातर !
॥ १७९ ॥ हृत्वाश्वं पांडवैर्वैरं मयैव तव कारितं । सम्प्रत्येवोत्तरीयं ते मया तव मस्तकाद्धृतं ॥१८०॥ विलम्बं कुरु मा दंडपा-
शिकाधम ! सत्वरं । युद्धायायांति ये वीरास्तानाकारयतु भवान् ॥ १८१ ॥ किञ्चित्क्रीडां पुनः कुर्वे यथा तैः सममादरात् ।
बुद्धिदानाय च पुनराह्वयाभयमंत्रिणं ॥ १८२ ॥ मां गृहितुं न शक्नोति बालमेकाकिनं भवान् । क्व ते चौरघरट्टत्वमद्य भोः
सकलं गतं ॥ १८३ ॥ अमिलद्बहुलो लोकस्तत्रायातोऽभयोऽपि च । तदा परिग्रहेणोचेऽभयो वीतभयस्त्विति ॥१८४॥ वीट-
कस्य प्रसादं चेत् कुरुषे मंत्रिराज! नः । वयं व्यपनयामोऽस्य तच्चौरस्याभिधामपि ॥१८५॥ प्राह चौरो निशम्येति यद्येवं कुरुत
स्फुटं । तत्किमप्यनृणीभावं भुक्तस्य भजताखिलाः ॥१८६॥ वस्त्रव्याघ्रैश्च युष्माभिः काणिकाया विनाशनात् । भक्षितं निखिलं

राज्यं श्रेणिकस्य क्षमाभुजः ॥ १८७ ॥ भविष्यत्यभ्यमित्रो मे युष्मासु निखिलेषु यः । मातुस्तारुण्यहारी स प्रतापाढ्यो न हि ध्रुवं ॥ १८८ ॥ क्षत्रियाः शौर्यसदनं यूममत्र समागताः । शृंगपुच्छपरिभ्रष्टाः शंडा वा साहसोत्कटा ? ॥ १८९ ॥ बीटकं त्यज्यमानाया रंडाया भवति ध्रुवं । संग्रामस्य तु वेलायां बीटकं याच्यते कथं ? ॥ १९० ॥ कारणं विद्यते स्थूलमथवा बीटकार्थने। देशत्यागस्य कार्येण तद्धि याचत निश्चयात् ॥१९१॥ बीटकेन त्रिपत्रेणाथवा किं काष्ठभक्षणं । अतीव प्रापिताः खेदमत्र यूयं करिष्यथ ? ॥१९२॥ काहलानां निनादोऽभूद्रणतूरध्वनिर्गुरुः । प्रतापिनां च शूराणां सिंहनादोऽतिदुस्सहः ॥१९३॥ धोंकारैर्धनुषां विश्वं संजज्ञे बधिरं किल । बाणपूरेण संछन्नः सहस्रकिरणस्तदा ॥१९४॥ वीराः कुर्वंति हुंकारान् स्वीयाहंकारसंभृताः । गच्छंति व्योममार्गेण शब्दायन्ते च सायकाः ॥१९५॥ निस्त्रिंशादीनि शस्त्राणि चञ्चत्तेजोमयानि च । सौदामिनीव झात्कारं कुर्वन्ति बहुकान्तिभिः ॥१९६॥ केऽपि लोष्ठानि काष्ठानि केऽपि केऽपि महच्छिलाः । केऽपि भल्लांश्च सबलान् केऽपि नानायुधानि च ॥१९७॥ जनाः सर्वाभिसारेण मुञ्चन्ति स्म महाबलाः । रौहिणेयं प्रति तदा रुध्वा च परितोऽधिकं ॥१९८॥ औषधीमंत्रयंत्राणां बलेन न तदंगके । जनमुक्तं प्रहरणं लगति स्म मनागपि ॥ १९९ ॥ अन्यच्च तेषां लोकानामेवान्योऽन्यं क्षणादपि । चौरमंत्रबलोद्भूतः कलिः समुदपद्यत ॥ २०० ॥ प्रासादाग्रस्थितश्चौरस्तान् वीक्ष्य कलितत्परान् । कलिकारकवत्प्रीतो हसति प्रौढशब्दतः ॥२०१॥ कलिं कृत्वा स्थितानूचे तानेवं परिपंथिकः । कुर्वाणाः समरं यूयं किं स्थिताः ? स्वयमेव भोः! ॥२०२॥ अहं युष्मद्वशे नास्मि तत्खेदं याथ किं वृथा । अन्यच्च दहनं मुक्त्वा दहामि सकलं पुरं ॥२०३॥ दत्तो मया तु लोकस्य स्वकीयो दक्षिणः शयः । स पीड्यते जनः सर्वो नैति किं चापि मत्करे ॥२०४॥ युग्मं ॥ पारिच्छदः कः ? किं थाम? कोऽभयः पितृभिर्मम । ग्रासोऽद्यत परं तेन विनाशं न करोम्यहं ॥ २०५ ॥ क्षिपामि हेलया प्रौढशिलां हन्म्यखिलान् जनान् । रटन्ति तु प्रियास्तेषां किमप्येति न मत्करे ॥ २०६ ॥ तस्मात्त्रास्याम्यहं भूयः पश्याम्यारक्षकस्त्वसौ । एवं ज्ञात्वा जल्पयताद्बंदिभिर्विरुदावलिं ॥ २०७ ॥ उक्त्वेति चौरोऽदृश्योऽभूज्जनो निजनिजे गृहे । जगाम चौरचरितैः सुप्रीतोऽपि च विस्मितः ॥ २०८ ॥ उद्वाहोऽथ भवन्नस्ति परिग्रहपतेर्गृहे । तत्रारक्षकरूपं स कृत्वातिष्ठन्मलिम्लुचः ॥ २०९ ॥ तावद्वार्त्तापि न कृता यावदूढौ वधूवरौ । द्वयोऽभूत्सप्तिवेलायां द्राग् लात्वा च वरं ययौ ॥ २१० ॥ वस्त्रादिसर्वमादाय तेन नग्नीकृतो वरः । दंडपाशिकगेहस्य गवाक्षेऽमोचि भीतिभाक् ॥ २११ ॥ कस्मादपि समाचारं ज्ञात्वा स्वीयाप्तमानवात् । जवात्परिग्रहेशेनावेष्ट्यतारक्षकगृहं ॥ २१२ ॥ अहं गवाक्षमध्येऽस्मि शिखिनं कोऽपि मास्यतु । इति प्रोक्ते वरेणापि महान् कोलाहलोऽजनि ॥ २१३ ॥ निःश्रेणिं मंडयित्वोच्चैः परिग्रहपतिः स्वयं । वरमुत्तारयांचक्रे देहक्षेमं च पृष्टवान् ॥ २१४ ॥ बंदं गृह्णात्यसौ दंडपाशिकः पुरमध्यतः । प्रदास्यामो वयं मानममुष्यातीवमंजुलं ॥ २१५ ॥ तस्मिन्नवसरे मंत्रिसमीपे दंडपाशिकः । अभूत् कोलाहलं श्रुत्वा साभयो गृहमाययौ ॥ २१६ ॥ अभयस्तान् जगादैवमत्र किं यूयमागताः ? । लुंटाका इव किं गेहं लुंटिष्यथ बलोत्कटाः ॥ २१७ ॥ कुत्र यूयं च कुत्रैष पार्श्वेऽभून्मम सांप्रतं । एष एवास्ति किं लब्धो युष्माभिः पांडवैरपि ॥ २१८ ॥ त्वं चेद्रक्षसि तद्रक्ष बन्दग्राही पुनस्त्वसौ । अस्य गेहे वरो लब्धः प्राहुरेवं च ते भटाः ॥ २१९ ॥ परिग्रहपतिः प्रोचे शृणु वाक्यं ममाभय ! । साक्षिणो न भवंत्यक्ष्णोः कदापि जगतीतले ॥ २२० ॥ बंदग्राही चौरराजोऽन्यायवान् जनवंचकः । एक एव तलारक्षो नास्ति कोऽपि परः पुरे ॥ २२१ ॥ मुषितं पत्तनं सर्वमनेनैव च मायिना। पक्षपातं करोषि त्वमस्य द्रविणलोभतः ॥ २२२ ॥ अंगारवृष्टिश्चंद्राच्चेत्तमसः प्रसरो रवेः। हुतभुक्संभवो नीरात्ततः किं क्रियतेऽभय !

॥ २२३ ॥ त्वत्तोऽप्यन्यायवृत्तिश्चेत्तत्को न्यायकरः क्षितौ ? । वृतिश्चेचिर्भटान्यात्ति ततः किं क्रियतेऽभय ! ॥ २२४ ॥ अन्यायिनमिमं चेत्त्वं मंत्रिन्! जुगुप्ससेऽधुना । पश्चादपि हि हत्वान्यराज्ये यास्याम्यहं ध्रुवं ॥ २२५ ॥ एवं विवादे संजायमानेऽसौ चौरसत्तमः । व्यक्तीभूय बभाणेत्यभयं मंत्रिमहत्तमं ॥ २२६ ॥ मयारक्षकरूपेण प्रजहेऽसौ वरोत्तमः । मयैवाभरणान्यस्येमानि लातानि वीक्ष्यतां ॥ २२६ ॥ संग्रामं मयका साकं कृत्वा बध्नीत मां समे । अन्यथा शीर्षमाच्छाद्य यात गेहे स्वके स्वके ॥ २२८ ॥ चलेन्न स्थानकादेष घातं मुंचामि यं प्रति । इत्युक्त्वा स्तंभितस्तेन तस्करेण परिग्रहः ॥ २२९ ॥ शस्त्राणि हस्ततस्तेषां सर्वेषां चौरराट् तदा । आदत्ते स्म चालंकारसंघातं च तदंगतः ॥ २३० ॥ विधाय जननीशिक्षामेवं तस्करशेखरः । वितीर्य मौक्तिकं हारमभयं च नमोऽकरोत् ॥ २३१ ॥ जगाद चैवं मंत्रींद्र ! त्वं कल्पतरुसन्निभः । अहं करीरतुल्योऽस्मि का स्पर्धा मे त्वया सह ? ॥ २३२ ॥ पुनर्मुख्यः प्रधानेषु त्वमेव मतिवैभवैः । तवैव शस्यते बुद्धिः सकलेऽपि जगत्त्रये ॥ २३३ ॥ अहं प्रतिदिनं नत्वा त्वां करिष्यामि भोजनं । भवत्पादावप्रणम्य नियमो भोजनस्य मे ॥ २३४ ॥ उपलक्षसि मां चौरं यदा मंत्रींद्र ! लक्षणैः । मरणांतं तदा स्तैन्यं त्यक्ष्याम्येव न संशयः ॥ २३५ ॥ हसित्वोवाच सचिवस्त्वं मया देहलक्षणैः । लक्षितश्चौरराजाथ का मतिस्त्वत्परीक्षणे ? ॥ २३६ ॥ सत्यप्रतिज्ञश्चौरेंद्र सत्यवाचा युधिष्ठिरः । स्वयं मुखेन यत्प्रोक्तं तत्पाल्यं वचनं त्वया ॥ २३७ ॥ चौरेण भणितं मंत्रिन्! वागस्माकं हि तादृशी । पृथिव्यां यादृशो मेरुर्लोहरेखा च यादृशी ॥ २३८ ॥ शतानीकसुतो नाहं चंडप्रद्योत एव वा । ययोः कूटं विधाय त्वं मतिमानभवो भुवि ॥ २३९ ॥ रात्रिरद्यापि बहुला विनिर्जित्य परिग्रहं । जगाम निजमावासं सुखेनापि स तस्करः ॥ २४० ॥ त्यक्तं सर्वमपि स्तैन्यं दयायां स्थापितं मनः । नानाप्रकारै रमते मध्ये राजगृहं पुरं ॥ २४१ ॥ वाचां बंधे स्थितश्चौरशेखरः सोऽनुवासरं । निरीक्षितं विना भुंक्ते नैव



ऽभयमंत्रिणं ॥ २४२ ॥ अन्यदाभयमंत्रींद्रोऽगमच्छ्रीजिनमंदिरे । देवपूजां विदधते विलंबश्चाभवद्बहुः ॥ २४३ ॥ जगामान्वभयं सोऽपि तस्करोऽतिबुभुक्षितः । पूजोपहारमादाय श्राद्धवेषधरो द्रुतं ॥ २४४ ॥ कृता निषेधिका तेन विशता न जिनगृहं । परितः समवसृतिं प्रदत्ता न प्रदक्षिणा ॥ २४५ ॥ अभयेन ततो ज्ञातं मंत्रिणा श्राद्धवेषभृत् । मलिम्लुचोऽथवा धूर्त्तः कोऽप्ययं जगतीतले ॥ २४६ ॥ साधर्मिक! त्वां वंदेऽहमित्युक्तेऽभयमंत्रिणा । लोकभाषानुगा तस्मै चक्रे तेन नमस्कृतिः ॥ २४७ ॥ लक्षणैरेभिरभयो मतिमान् मानसे स्वके । ज्ञातवान् महिषीपालं तं न श्रावकसत्तमं ॥ २४८ ॥ गृहीत्वा दक्षिणं बाहुं तस्य चौरस्य धीसखः । चचाल वार्त्तयन् स्वीयमंदिरं प्रति तं पथि ॥ २४९ ॥ उपलक्षिता मया यूयमद्य देव! न संशयः । पालय स्वीयवचनं यदि त्वं सत्यवागसि ॥ २५० ॥ इत्युक्ते मंत्रिणा प्राह चौरः साहसबुद्धिमान् । किं वाचः पालनं मंत्रिन्नथवा किमुपलक्षणं ॥ २५१ ॥ यूयं वृद्धिं गता राज्ञः सभायां बुद्धिवैभवाः । व्यवहारिणो वयं मन्त्रिन्! भद्रका मुग्धमानसाः ॥ २५२ ॥ युष्मच्छमस्यां जानीमः कथंचन वयं हि न । प्रश्नं चेद्विद्यते किंचित्तद्व्यक्तं वद मे पुरः ॥ २५३ ॥ युष्मत्पार्श्वे निषीदन्ति सभायां ये तु कोविदाः । युष्मदुक्तं विजानन्ति ते नरा नेतरे क्षितौ ॥ २५४ ॥ क्षणेन पुरतो राज्ञस्तावुभौ चौरधीसखौ । आयातौ भूपसदसि वेष्टितौ नरकोटिभिः ॥ २५५ ॥ विधाय प्रणतिं भूपमुवाचाभयमन्त्रिराट् । असौ स तस्करो येन लुंटितं सकलं पुरं ॥ २५६ ॥ नवं नवं करोत्येष रूपं प्रतिदिनं नृप! । चरित्रमस्य चौरस्य नरेन्द्र! वचनातिगं ॥ २५७ ॥ पुरारक्षो विनटितोऽनेन चौरेण हेलया । नृत्यं कृत्वा वरं लात्वाश्वरूपेणैष नष्टवान् ॥ २५८ ॥ जिनपूजां कुर्वतो मे समागाज्जिनमन्दिरे । निषेधिकामकृत्वैव प्राविशच्चैत्यमध्यतः ॥ २५९ ॥ परितः समवसृतिं नादादेष प्रदक्षिणां । योग्योऽसौ दक्षिणायाश्च तदा ज्ञातं मया स्फुटं ॥ २६० ॥ श्रेणिकोऽपि तदोवाच जैनं जयति शासनं । विवे-

कविनयाचारविचारगुणमंडितं ॥ २६१ ॥ तेजोमया हि सर्वेऽपि ग्रहनक्षत्रतारकाः । न सूर्येण समोऽप्येको वर्ण्यते कोविदैर्यथा ॥ २६२ ॥ तथा जगत्यां सर्वेऽपि सन्ति धर्मा मनोहराः । न जैनधर्मतुल्योऽस्ति कोऽपि धर्मो जगत्रये ॥ २६३ ॥ गणेशं कथयित्वापि तित्तिरं जिह्वया स्वया । हत्वा खादंत्यहो मूर्खा मिथ्याधर्मरता नराः ॥ २६४ ॥ अथवा नागपंचम्यां नागमर्चंति गोमयं । प्रस्फुरन्तं चलन्तं च प्रत्यक्षं घ्नन्ति भोगिनं ॥ २६५ ॥ जिनधर्मपरित्यक्ता ब्रुवन्तः परटा इति । बब्बूलफलिका बह्वीर्भक्षयंत्यविवेकिनः ॥ २६६ ॥ जिनधर्मविहीना ये मानवाः स्युर्महीतले । ते देवगुरुपूजायाः समाचारं विदन्ति न ॥ २६७ ॥ अतः श्रीमन्महावीर! विवेकविनयान्विते । मतिः स्फुटा जैनधर्मे मम भूयाद्भवे भवे ॥ २६८ ॥ भूपालमंत्रिणोर्वाक्यमेवमुक्तं शृणोति सः। आमिलन्नागरो लोकस्तं निरीक्षितुमाकुलः ॥ २६९ ॥ अवदत्सकलो लोक एकवाक्येन वीक्ष्य तं । एतं कथं रुद्धवांस्त्वं मंत्रीन्द्र! वद सत्वरं ॥ २७० ॥ रौहिणेयोऽभिधानेन रमाक्रीडानिकेतनं। प्रसिद्धः पुरवासीभ्यः सभ्यलोकसुरद्रुमः ॥ २७१ ॥ दत्ते क्रीणाति वा स्वर्णकोटिमेष नरोत्तमः। शुल्कहट्टे ददात्येष द्रव्यलक्षं न संशयः ॥ २७२ ॥ वणिक्पुत्रा घनाः सन्ति भूपास्य व्यवहारिणः । संप्रेष्यतां निजा दूतास्तानाकारयत द्रुतं ॥ २७३ ॥ परोपकारी पुण्यात्मा पापदोषविवर्जितः । दुर्बलानामनाथानां विश्रामो ह्येष ते पुरे ॥ २७४ ॥ न चायात्यथ युष्माकं बुद्धौ यो न जानाति देवेभ्यो मानवोऽर्चितुमार्जवात् । न जानात्यथवा कर्त्तुं सेवां वो भद्रकत्वतः ॥ २७५ ॥ यो दक्षतागुणैः । स सर्वो घटते चौरः किं मंत्रिन्! पुरमध्यतः ॥ २७६ ॥ युग्मम् ॥ रौहिणेयममुं मुंच भद्रकं व्यवहारिणं । अथ चेन्नो चालिष्यामस्तद्वयं भवतः पुरात् ॥ २७७ ॥ जनवाचं निशम्येत्यभयः प्राह विषण्णधीः । भग्ना वयं गृहीत्वामुं जना! व्रजत सत्वरं ॥ २७८ ॥ रौहिणेयो बभाणैवं किं यात्वा क्रियते गृहे । कलंकं मेऽपनयामुं सत्यं वासत्यमद्य भोः ॥ २७९ ॥ आकर्षयामि भुजगं



फटाटोपोत्कटं घटात् । गृह्णामि गोलमयसोऽग्नितप्तं दक्षिणे करे ॥ २८० ॥ खदिरांगारपूर्णे वा कुंडे झम्पां ददाम्यहं । स्वीयनिर्मलभावत्वाद्विषं खादामि वोल्वणं ॥२८१॥ सकलस्यापि देवस्य पिबामि कोशमादरात् । निजमेवं प्रकारेण कलंकमपनयामि भोः ॥२८२॥ हसित्वाथाभयोऽवादीज्जाने त्वच्चरितं समं । अग्निना दह्यसे नैव त्वं न सर्पैश्च खाद्यसे ॥ २८३ ॥ न बद्ध्यते भवान् पाशैर्विषं न प्रगमेत्तव । निःशूकत्वाच्च धैर्यान्न प्रभवंति सुरा अपि ॥ २८४ ॥ मंत्रप्रभावतो नीरं करोति शिखिनं भवान् । शपथं तं कुरुष्व त्वं यमहं कारयामि भोः ॥ २८५ ॥ ओमुक्ते रौहिणेयेन तदैका दीपधारिका । पुंसा कलावतैकेन निर्मिता बहुयत्नतः ॥ २८६ ॥ बहुदोरकसंचारैर्विस्मापितबहुप्रजा । मनोज्ञरूपसंयुक्ता भूषणैश्च विभूषिता ॥ २८७ ॥ पिनष्टि दन्तान् सैकस्य दोरकस्य हि चालनात् । केनापि दोरकेणैषासिप्रहारं विमुञ्चति ॥ २८८ ॥ यन्त्रेणैकेन सा नृत्येत् केनापि कुरुते स्मितं । केनापि रुदितं कुर्यात् केनाप्युत्फुल्ललोचना ॥ २८९ ॥ उत्पादयति सा मोहं केनापि जनमानसे। उपायने समानीता सायाता मन्त्रिणः स्मृतौ ॥ २९० ॥ मन्त्रिणानायिता संसन्मध्ये सा दीपधारिका । चौरसंहारिणी नाम्ना खड्गखेटकधारिणी ॥ २९१ ॥ आनीतायां च तस्यां हि चौरमूचे स धीसखः । कुरु त्वमस्या देव्या भोः प्रणतिं भक्तिनिर्भरः ॥ २९२ ॥ चौरो भविष्यसि त्वं न चेत्साधुश्च भविष्यसि। गृहीष्यति तदा नाम तवाप्येषा न संशयः ॥ २९३ ॥ रौहिणेयस्तदोवाच मंत्रिणं शृणु धीसख!। मुक्त्वा जिनमहं नान्यं नमामि स्थिरमानसः ॥ २९४ ॥ लोकं माभय! पश्य त्वमात्मना सदृशं समं । त्वं मंत्रींद्रो नरेन्द्रस्य मिथ्यात्वस्य समाश्रयः ॥२९५॥ अग्रेऽपि हि त्वया यक्षः पूजितोऽसंख्यमानवैः । अग्रेभवन्ननाचारं श्राद्धैः कारयासि त्वकं ॥ २९६ ॥ नित्यं स्वलक्षणैरेभिः शुद्धसम्यक्त्वधारिणं । तथा श्रीवीतरागस्य भक्तं भाणयासि स्वकं ॥२९७॥ कुर्वेऽस्याः शपथं नाहं श्रावको जातु निश्चयात् । इत्युक्त्वा चिंतयित्वा च पुनराह स तस्करः

॥२९८॥ शपथांश्चेत्करिष्यामि चाग्रहात्तव संप्रति । आलोचनां ग्रहिष्यामि पुनः सुगुरुसन्निधौ ॥२९९॥ चिरं तेऽहं सहिष्यामि कोपं मरणकारकं । लगिष्ये न पुनर्देव्याः पादयोर्मंत्रिसत्तम ! ॥३००॥ दुःप्रापं भवलक्षेऽपि सम्यक्त्वं याति येन मे । प्राणत्यागेऽपि सचिव ! विधास्यामि हि तन्न हि ॥ ३०१॥ श्रुत्वेति वाक्यं चौरस्य मुमुदे श्रेणिको नृपः । साधर्मिकोऽयं मंत्रिन् ! मे चौरो न घटते ह्यसौ ॥ ३०२ ॥ संसत्समक्षं चौरः स पुनरूचेऽतिनिर्भयः । जनानां पश्यतां मंत्रिन्नृतं मां कुरु वानृतं ॥ ३०३ ॥ इत्युक्ते पूजिता तूर्णं पांचाली मंत्रिणा सुमैः । अतीवरम्यमदिरावारिणा स्नापिता स्वयं ॥ ३०४ ॥ यस्याः परिमलेनाप्यचेता भवति मानवः । तत्स्नात्रमदिरावारि पायितश्चौरशेखरः ॥ ३०५ ॥ पिबतः स्नात्रपानीयं पांचाली तस्य मस्तके । घातं मुमोच खड्गस्य रज्जुसंचारयोगतः ॥३०६॥ इतश्च सोऽपि मदिरापानघूर्णितलोचनः । विसंज्ञः पतितः पृथ्व्यां लोकैश्चामंस्त स मृतः ॥ ३०७॥ हाहाकारः कृतः सर्वैर्लोकैस्तद्भक्तितत्परैः । अश्रुपातश्च मुमुचे तस्य शोकेन पीडितैः ॥ ३०८ ॥ अविचारपरा भूपाः कथ्यन्ते शास्त्रकोविदैः । न तद्वचलीकं भवति युगान्तेऽपि महीतले ॥ ३०९ ॥ जनतेत्युक्तिवाचाला जगाम स्वस्वमन्दिरे । अभयः सज्जयाञ्चक्रे प्रासादं सप्तभूमिकं ॥ ३१० ॥ सुधाधवलितं रम्यं चंद्रोदयविराजितं । कर्पूरागरुकस्तूरीधूपधूपितमध्यकं ॥ ३११ ॥ पिहिता पट्टकूलेनाकीर्णा पुष्पोत्करेण च । मुक्ता प्रासादमध्ये च शय्यैकातिसुकोमला ॥ ३१२ ॥ स्वामी जातस्त्वमस्माकं कैः पुण्यैस्त्रिदिवेऽत्र भोः । विहितं जन्मनि प्राच्ये स्वं पुण्यं वद नः पुरः ॥ ३१३ ॥ शिक्षामेवंविधां दत्वा चतस्रश्च वराङ्गनाः । मालाङ्कितकरा मुक्ताः शय्यापादचतुष्टये ॥ ३१४ ॥ गीततालानुमानज्ञः प्रवीणो नृत्यकर्मणि । गान्धर्वादिः समग्रोऽपि सम्प्रदायो व्यमोचि च ॥ ३१५॥ इतः स मदिरापानेनोन्मत्तो रौहिणेयकः । स्वापितस्तत्र शय्यायामुत्पाट्याभयमंत्रिणा ॥ ३१६ ॥ गतेऽथ मदिरोन्मादे सचेताः सोऽभवत्क्षणात् ।



तुल्यं सुरविमानेन गृहमैक्षिष्ट सुंदरं ॥ ३१७ ॥ स्त्रियो विलोकिता देवीसान्निभा रूपबंधुराः । नरा देवोपमा रूपसौन्दर्यगुणशालिनः ॥ ३१८ ॥ अस्मिन्नवसरे देव्यः कृत्रिमाः पुष्पस्रग्धराः । ऊचुः पुरः समागत्य प्रौढेन ध्वनिना तकं ॥ ३१९ ॥ स्वर्गोऽयं पंचमः स्वामिन् ! विमानं सर्वसुंदरं । तस्याधिपत्यं संजातं तव पुण्यप्रभावतः ॥ ३२० ॥ एता वयं कलत्राणि ते चतस्रोऽपि सुंदर ! । एते सर्वेऽपि ते देवाः सर्वदादेशकारिणः ॥ ३२१ ॥ प्राच्यजन्मकृतं पुण्यमादौ नः पुरतो वद । पश्चात्स्वर्गसमाचारं यथा कुर्मो वयं तव ॥ ३२२ ॥ जप्तस्त्वया महामंत्रस्तपस्तप्तं त्वयाथवा । दानं दत्तं सुपात्रे वा यद्विमानाधिपोऽभवः ॥ ३२३ ॥ मरणांतं वा त्वया क्षात्रं पातितं वा जनगृहे । अस्मिन् गात्रेऽथवा पीडा कापि सेहे त्वया प्रभो ! ॥ ३२४ ॥ धारातीर्थेऽथवा प्राणत्यागो हि विदधे त्वया । सत्यं वद त्वं कैः पुण्यैरस्माकं नायकोऽभवः ॥ ३२५ ॥ इतोऽभयोऽपि मंत्रीह वणिजः पुरवासिनः । नागाख्यं रथिकं चैव समाहूयागतोऽस्ति च ॥ ३२६ ॥ तेषामग्रेऽस्ति कथयन् चरितं शृणुतैकदा । रौहिणेयस्य पश्चात्तु यूयमुच्चलत द्रुतं ॥ ३२७॥ रौहिणेयो निशम्याथ देवीवाक्यान्यचिंतयत् । अपीदं बुद्धिविज्ञानं किमप्यभयमंत्रिणः ॥ ३२८ ॥ चौरराजश्चंचलश्च लोकसंतापकारकः । मादृशोऽपि यदि स्वर्गं याता तद्दर्गतौ हि कः ? ॥ ३२९ ॥ ख्यातानि यानि वीरेण लक्षणानि दिवौकसां । दृश्यंते तानि नैतासु देवीषु हि मनागपि ॥ ३३० ॥ आसां शुष्यंति पुष्पाणि पादौ च स्पृशतो भुवं । मेषोन्मेषं प्रकुर्वाते लोचने चातिचंचले ॥ ३३१ ॥ देवांगनाविमानादि सर्वं कृत्वापि कृत्रिमं । ज्ञातुं मम मनोवृत्तिं धृत्वानीतोऽहमत्र वै ॥ ३३२ ॥ प्रदास्याम्यहमेतासामुत्तरं रम्यमद्य वै । चिन्तयित्वेत्युवाचायं देवदेवांगनाः प्रति ॥ ३३३ ॥ वासो ममाभवद्रम्ये पुरे राजगृहे सदा । रौहिणेयाभिधानस्य प्रकृष्टव्यवहारिणः ॥ ३३४ ॥ श्रीवीरजिनपार्श्वेऽभून्मम चेतः सदैव हि । गमनं तत्र न प्राप्तमंतरायेण केनचित् ॥ ३३५ ॥ संयमोपरि श्रद्धा-

भूत्तपस्तप्तं सुदुस्तपं । पुनस्तस्मिन् पुरे मंत्र्यभयोऽभूत् श्रेणिकात्मजः ॥ ३३६ ॥ दत्तः कलङ्को मे तेन व्यलीकः स्तैन्यसंभवः । पायितोऽहं विषं क्रोशमिषेणातीवभद्रकः ॥ ३३७ ॥ दत्तः प्रहारः शीर्षे च देव्या निस्त्रिंशसंभवः । दीक्षामनोरथश्चित्तेऽभून्नष्टोऽभाग्यतस्तदा ॥ ३३८ ॥ गंधोत्कटैः सुमनसैर्वीतरागो मयार्चितः । दत्तं दानं सुपात्रेभ्यः परमश्रद्धयान्वहं ॥ ३३९ ॥ व्यलीकोऽपि कलङ्कश्च दत्तः सेहे क्षमाभृता । एतैः पुण्यैर्विमानेऽस्मिन्नहं सुरवरोऽभवं ॥ ३४० ॥ जजल्पुस्ताः पुनर्देव्यः सहास्माभिरहोनिशं । मनोरथाधिकं भुंक्ष्व सुखं विषयसंभवं ॥ ३४१ ॥ विमानेऽत्र सुरो योऽभूत् पुरा यूयं तदंगनाः । मम स्थ जननीस्थाने युष्माकं चाप्यहं सुतः ॥ ३४२ ॥ शृण्वन्तौ स्तस्तदा नागगोभद्रव्यवहारिणौ । पुनर्देवो बभाणैवं वचो निर्णयरूपकं ॥ ३४३ ॥ व्यवहारो न यत्रास्ति जननीतनुजन्मनोः । स्वर्गेणापि न मे कार्यं तेन मे पापदायिना ॥ ३४४ ॥ रूपसौभाग्यतो यासां चलंति यतयोऽपि हि । न ताभिः क्षुभितः किंचिद्रौहिणीकुक्षिसंभवः ॥ ३४५ ॥ नागेन गत्वा कथितं श्रेणिकस्य क्षमाभुजः। चरित्रं सकलं तस्य चित्तविस्मयकारकं ॥ ३४६ ॥ श्रेणिकोऽपि समागत्याभणत्तं रौहिणेयकं । धर्मागार ! विचारज्ञ ! मम मंतुं क्षमस्व भोः ॥ ३४७ ॥ साधर्मिकस्त्वमस्माकं मंत्री किमपि वेत्ति न । इतो वर्द्धापनं जातं श्रीवीतरागसंभवं ॥ ३४८ ॥ वीरं समवसृतं ज्ञात्वा मोक्षलक्ष्मीप्रदायिनं । प्रमोदपूर्णः संजज्ञे पुरवासी जनोऽखिलः ॥ ३४९ ॥ रौहिणेयोऽथ संयोज्य पाणी प्रोवाच मंत्रिणं । देवानामपि जित्वर्यै बुद्धये ते नमोऽस्तु मे ॥ ३५० ॥ इयं ते वारुणी मंत्रिन् ! दुर्गतिद्वयवारिणी । कुर्वतोऽप्यपकारं मे उपकारः कृतस्त्वया ॥ ३५१ ॥ ममाशावर्द्धनो मंत्रिन्नसावायस्त्वया ददे । विमानं कुर्वतापि मे विमानं ढौकितं त्वया ॥ ३५२ ॥ सर्वमेतत्त्वया चक्रे मां ज्ञातुं मंत्रिपुंगव ! । तव बुद्धिर्जनोत्कृष्टा गुरोरपि वचोऽतिगा ॥ ३५३ ॥ महिमा तव हस्तस्य मंत्रीश्वर ! महत्तरः । यद्धत्तासवयोगेन विमानमभवन्मम



॥ ३५४ ॥ अपराधो मया मंत्रिन् ! यः कृतो वचनातिगः । तेनापि ते प्रसादेन साधुर्जातो जगत्त्रये ॥ ३५५ ॥ उपकारकरः कोऽपि त्वत्तो नान्यो जगत्त्रये । मया पुरं विनटितं त्वयाहं पायितोऽमृतं ॥ ३५६ ॥ शृण्वमात्य ! म्रियंते ये जीवंतोऽपि नराः क्षितौ । महावीरप्रसादेन ते जायंतेऽजरामराः ॥ ३५७ ॥ त्वयाहं पायितो यस्तु क्रोशो देव्याः स तूत्तमः । जातोऽहं तेन निर्दोषो यत्त्वत्पाणिप्रभावतः ॥ ३५८ ॥ देवोऽभणत् करे देव्या असिर्योऽतिगुणो हि सः । तेन मे मस्तकादोषः सर्वोऽप्युत्तारितः क्षणात् ॥ ३५९ ॥ खड्गप्रहारो यो दत्तो देव्या मे मस्तकेऽनया । परमार्थस्वरूपेण स मे संसारतारकः ॥ ३६० ॥ लोकाः शृण्वन्तु सर्वेऽपि चौरोऽहं चौरवंशजः । मातृपितृपक्षशुद्धो देवानामपि दुर्धरः ॥ ३६१ ॥ गन्तुं नो दत्तवान् वीरसभायां जनको मम । इयत्कालं ततस्तेन वंचितोऽहं सदैव हि ॥ ३६२ ॥ तद्वाक्यस्यातृणीभूतः कृतश्चाभयमंत्रिणा । भवपारं व्रजिष्यामि लात्वा दीक्षामथाहकं ॥ ३६३ ॥ एकेन वीरवाक्येन यदाहं बुद्धिपाशतः । छुटितोऽथ ततस्तस्य श्रोतुमिच्छामि वाग्भरं ॥ ३६४ ॥ अभयोऽप्यवदद्वीरवाक्यानि च श्रुतानि भोः । यानि तान्येव यशसा कीर्त्या च फलितानि ते ॥ ३६५ ॥ चतुर्द्धा बुद्धयो या हि वर्त्तंते वसुधातले । सर्वासामप्यहं तासां निधानं पुण्ययोगतः ॥ ३६६ ॥ मयापि मतिभिस्ताभिर्न निर्जितो भवानहो ! । मद्यैर्नाप्यभवन्मत्तः स्त्रीभिश्चापि न वाहितः ॥ ३६७ ॥ अथ चौरोऽवदन्मंत्रिन् ! स्वप्नं लब्धं मयाधुना । तत्र जानाम्यहं यत्त्वं श्वेतांब्यां सचिवोऽभवः ॥ ३६८ ॥ तवांगरक्षकश्चाहं समादेशकरोऽन्वहं । नित्यं पृष्ठानुगामी च सत्त्ववान् सरलाशयः ॥ ३६९ ॥ पार्श्वेऽन्यदा प्रधानस्य मायावी जनवंचकः । योगीन्द्ररूपधारी च धूर्त्त एकः समाययौ ॥ ३७० ॥ स स्वीयेन गुरुत्वेन मानाभ्युत्थानदानतः । तेन सन्मानितोऽतीव स्वभावो हि सतामसौ ॥ ३७१ ॥ एकदावसरं लब्ध्वा स आगमनकारणं । पृष्टः प्रधानवर्येण सोऽप्याख्याति स्म तत्पुरः ॥ ३७२ ॥ वनं कौतुकभंडारं नानाश्चर्यमनोहरं । विचि-

त्रौषधिवल्लीभिर्वृक्षैश्चापि समाकुलं ॥ ३७३ ॥ आयासि चेद्वने तत्र स्वर्णसिद्धिं ददामि तत् । बह्वाश्चर्यकरा विद्या मंत्रांश्च शतसंख्य-कान् ॥ ३७४ ॥ अनापृच्छय कुटुंबं स्वं ययौ तमनुयोगिनं। लोभाभिभूतः सचिवो लोभो हि दुरतिक्रमः ॥ ३७५ ॥ उल्लंघ्य बहुलां भूमिं योगी सचिवमूचिवान् । अपायस्थानकं ह्येतद्वनं प्रेतवनोपमं ॥ ३७६ ॥ कृतांततुल्यरूपा हि भिल्लानामत्र कोटयः । भयानकाश्च भल्लूका व्याघ्रसिंहाः सहस्रशः ॥ ३७७ ॥ अदृश्यीभूय चेदत्र गम्यते वै ततो वरं । गमनस्य प्रकारोऽत्र कांतारे नान्यथा नृणां ॥ ३७८ ॥ चिक्षेपांजनमित्युक्त्वा स योगी तस्य नेत्रयोः । तत्प्रभावेण सचिवो व्याघ्ररूपत्वमाददे ॥ ३७९ ॥ योगी स निश्चलं कृत्वा तं व्याघ्रं स्तंभिनीबलात् । आरुरोह सुखं तेन पंथानमतिवाहयत् ॥ ३८० ॥ मार्गेऽथ गच्छतस्तस्य मिलितौ राक्षसावुभौ । वृद्धेन राक्षसेनोक्तं यासि योगिन् ! क्व मे पुरः ॥ ३८१ ॥ गंधेन मयकाज्ञायि व्याघ्रोऽयं मानुषोऽभवत् । तन्मह्यमेनं देहि त्वं यथा भक्ष्यं भवेन्मम ॥ ३८२ ॥ अनर्पयति योगीन्द्रे संग्रामोऽभूत्तयोर्मिथः । त्रिशूलेन हतः शीर्षे नृचक्षा मृत्युमाप्तवान् ॥ ३८३ ॥ अथ द्वितीयो यद्रक्षस्तेनापि स्वीयमायया । रूपं मत्स्येंद्रनाथस्य योगिनो विदधे तदा ॥ ३८४ ॥ योगी व्याघ्रात्समुत्तीर्णो दृष्ट्वा मत्स्येंद्रयोगिनं । नमस्करोति तं यावत्तावद्व्याघ्रः प्रणष्टवान् ॥ ३८५ ॥ कृत्वा प्रणाममूर्ध्वं स यावत्पश्यति भक्तिभाक् । तावन्न योगी न व्याघ्रो विखिन्नः सोऽपि मानसे ॥ ३८६ ॥ द्वितीयः कर्बुरः सोऽथ व्याघ्रमादाय यातवान् । यांतौ निरीक्ष्य तौ योगी पृष्ठे लग्नोऽप्यधावत ॥ ३८७ ॥ कुत्रापि विवरे तौ द्वौ प्रविष्टौ ज्ञायते न तत् । तत्रैव विपिने सोऽस्थाद्योगी कूटकलानिधिः ॥ ३८८ ॥ व्याघ्रो नृचक्षसाथोक्तः करोमि त्वां पुनर्नरं । वचोऽभावात्ततस्तेन कर्बुरस्य कृता नतिः ॥ ३८९ ॥ एकस्य बत वृक्षस्य पुष्पमानीय संत्वरं । स गंधं ग्राहितो व्याघ्रः पुनर्मानुष्यमाप्तवान् ॥ ३९० ॥ निर्ययौ कंदरामध्याद्वनमध्ये भ्रमन्नथ । वनं सुगन्धं कुर्वाणं दृष्टवान्

गन्धजाहकं ॥ ३९१ ॥ तं गृहीतुमनाः पृष्ठौ स जगाम कुतूहली । केनाप्यदृश्यरूपेण निषिद्धोऽप्येष न स्थितः ॥ ३९२ ॥ स्थितः स गात्रसंकोची समागत्यास्य सन्निधिं । जगृहे सचिवेनापि कराभ्यां सहसैव सः ॥ ३९३ ॥ तदीयकरसंयोगान्मार्जारो योग्यभूत् क्षणात् । योगिनोल्लालितस्तेन मंत्री गगनमभ्यगात् ॥ ३९४ ॥ वलमानः पथिव्यां स न पपात कथंचन । तदेति योगिना प्रोक्तं रोषाकुलितचेतसा ॥ ३९५ ॥ मया तेऽदृश्यभावोऽयमुपकारकृते कृतः । राक्षसेन समं त्वं च प्रणष्टो मम पार्श्वतः ॥ ३९६ ॥ सदैव कथितं चेन्मे कुरुषेऽथाविशंकितः । उत्तारयामि तदहं त्वामद्य गगनांगणात् ॥ ३९७ ॥ त्वदीयं वचनं सर्वं विधास्यामीति जल्पिते । अपतत्स धरापीठे योगिनोऽग्रेऽतिसाहसी ॥ ३९८ ॥ चेलतुस्तौ ततः स्थानाद्गच्छतो वनमध्यतः । अपश्यतां क्वचित्स्थाने कृष्णचित्रकवल्लरीं ॥ ३९९ ॥ समुद्यतौ तदादाने यदा तौ योगिमंत्रिणौ। भूतसंघातमध्यस्थस्तदैको भूत ऊचिवान् ॥ ४०० ॥ विना रक्तबलिं नैषा ग्रहीतुं शक्यते लता । हठाद्ग्रहीष्यथश्चेद्वा तदाऽजीवौ भविष्यथः ॥ ४०१ ॥ इत्युक्ते योगिना तेन सचिवस्य शरीरतः । रक्तं निष्कासितं भूरि तस्यै भूताय चार्पितं ॥ ४०२ ॥ लग्नौ यावद् ग्रहीतुं तां तावदादाय भूतराट् । चचाल चान्वधाविष्टां तौ पश्यन्तौ च वल्लरीं ॥ ४०३ ॥ गिरेर्मध्येऽस्ति विवरं यमवक्त्रेण सन्निभं । द्वारयंत्रं समुद्घाट्य तत्र भूतः प्रविष्टवान् ॥ ४०४ ॥ तत्र तावप्यनुगतौ तत्रैकं कुंडमागतं । जलान्तर्यातवान् भूत उपकंठे च तौ स्थितौ ॥ ४०५ ॥ स्वस्मिंश्च सचिवे मंत्रमुद्रां दत्त्वातिबंधुरां । गतौ जलांतः सोपानपंक्तिं तावप्यपश्यतां ॥ ४०६ ॥ तामुल्लंघ्य च पातालपुरसीम्नि समागतौ । अपश्यतां प्रौढतरं प्रासादं सप्तभूमिकं ॥ ४०७ ॥ भूतः करस्थवल्लीकः प्राविशत्तत्र मंदिरे । तत्रोपविष्टमास्ते च योगिनीचक्रमुद्धतं ॥ ४०८ ॥ राक्षसास्तत्प्रतीहारा लब्ध्वा गंधं तयोर्द्रुतं । लोलजिह्वा अधावंत मांसास्वादनलंपटाः ॥ ४०९ ॥ स्तंभयित्वाथ योगी तान् प्राविशन्मन्दिरांतरे । योगिनीनां पुरः ख्यातं तस्य भूतस्य चेष्टितं ॥ ४१० ॥ योगिनी चक्रमा-

चख्यौ द्वात्रिंशल्लक्षणैर्युतं । मनुष्यं दीयते हत्वामुष्मै निर्भयचेतसे ॥ ४११ ॥ वल्लरीयं ततो लभ्याधिष्ठातास्या अयं यतः। स्वच्छन्दगामी लीलावान् भूतो भैरवनामभृत् ॥ ४१२ ॥ सचिवेन ततः खड्गमाकृष्य निदधे द्रुतं । स्वकंठे योगिनीचक्रं संतुष्टं तावदुज्जगौ ॥ ४१३ ॥ मार्गेण येनागच्छस्त्वं पश्चात्तेनैव तु व्रज । अस्मत्प्रभावतो मार्गे सुखेनैव गमिष्यासि ॥ ४१४ ॥ यस्माद्वनात्समायातस्तस्मिन्नेव हि गच्छ भोः। नरवृक्षाद्धनप्राप्तिस्तत्रावश्यं भविष्यति ॥ ४१५ ॥ एकयाथ रहः ख्यातं देव्या तस्य तु मंत्रिणः । केनापि त्वमुपायेन योगिनः संगतिं त्यज ॥ ४१६ ॥ नरवृक्षं यदा पश्येस्तदा नीरेण कल्पनं । त्वमस्य कुर्या इयता स्वयमेव मरिष्यति ॥ ४१७ ॥ नरवृक्षप्रभावस्तु सर्वोऽपि कथितः पुनः । ततोऽसौ निर्ययौ कुंडाध्वना साकं च योगिनः ॥ ४१८ ॥ द्वारयंत्रमतिक्रम्य पुनस्तद्द्वारमाप्तवान्। योगींद्रः सचिवश्चापि भ्रमंतौ स्त इतस्ततः ॥ ४१९ ॥ नरवृक्षं मार्गयंतौ लभेते क्वापि तौ न हि । कुंडद्वितीयमध्यस्थं प्रासादं चाप्यपश्यतां ॥ ४२० ॥ तन्मध्ये पार्श्वनाथस्य प्रतिमास्ते मनोरमा । पातालाधिपनागस्य फणैः सप्तभिरंकिता ॥ ४२१ ॥ तं प्रणम्य जगन्नाथं तौ बाह्ये रंगमंडपे । वातायनसमासीनौ पश्यंतौ स्तो जिनालयं ॥ ४२२ ॥ यत्कुंडयुग्मं तत्रास्ते सोपानश्रेणिमंडितं । तयोश्चैकत्र शीतांबु द्वितीयेऽप्युष्णमेव च ॥ ४२३ ॥ तयोः प्रपश्यतोस्तत्र द्युसदां सार्थ आययौ । झंपां वितीर्णवानुष्णजलकुंडेऽतिसोद्यमः ॥ ४२४ ॥ तज्जलस्नानसंयोगाद्देवा वानरतां गताः । वानर्यश्चाभवन् देव्यः कृतः किलकिलारवः ॥ ४२५ ॥ गंधोत्कटानि पुष्पाणि फलानि सरसानि च। मुख्यवानरवाक्येन निन्युस्तत्रापरे समे ॥ ४२६ ॥ वानरीभिः समानीतनीरपूरेण वानराः । चक्रुः स्नात्रं जिनेंद्रस्य पूजां च कुसुमोत्करैः ॥ ४२७ ॥ गीतरागप्रपंचेन वादित्रैश्च मनोरमं । देवनाटकसंकाशं नाटकं तत्र च कृतं ॥ ४२८ ॥ द्रव्यपूजां भावपूजां विधाय कपयः समे । रंतुं प्रवृत्ताः सर्वत्र स्वेच्छया वनमध्यतः ॥ ४२९ ॥ चिरं रंत्वाथ संध्यायाः समये कपयः समे । झंपां ददुः शीतजलकुंभेऽतिबहुविस्तृते ॥ ४३० ॥ तत्प्रभावाच्च ते सर्वे देवत्वं प्रापुरादिवत् । स्वेच्छया विचरंतश्च कुत्रापि स्थानके गताः ॥ ४३१ ॥ तौ तथैव स्थितौ तत्र प्रासादे योगिमंत्रिणौ । पुनर्द्वितीयदिवसे तथैव तदपश्यतां ॥ ४३२ ॥ मंत्रिणा भणितं योगिन्! कपिमध्ये व्रजाम्यहं । कपिरूपभृदद्य त्वं यद्याख्यासि समाहितः ॥ ४३३ ॥ यथाद्रोमध्यसंस्थोऽहं पश्यामि सकलांस्तरून् । भाग्यसंयोगतो जातु नरवृक्षोऽपि लभ्यते ॥ ४३४ ॥ आदेशाद्योगिनो मंत्री कुंडे झंपां प्रदत्तवान् । वानररूपमाधाय निर्ययौ कपिमध्यगः ॥ ४३५ ॥ चैत्यपूजादिकं कृत्वा रममाणेषु तेषु च । मुख्यवानरपत्नी स्वं पतिं पप्रच्छ वाग्मिनं ॥ ४३६ ॥ स्वामिन्! किं नरवृक्षोऽस्ति वृक्षेष्वेतेषु बंधुरः । यस्य दुग्धप्रमाणेन ज्ञायते भूगतं धनं ॥ ४३७ ॥ प्राह सोऽप्येहि मे सार्थं यथा तद्दर्शयामि ते । इत्युक्त्वा तच्चचालाशु मिथुनं विपिनौकसः ॥ ४३८ ॥ अन्वयासीन्मंत्रिकपिस्तद्युग्मं लीलयोल्ललत् । उपाविशंस्त्रयो गत्वा नरवृक्षोपरि स्थिराः ॥ ४३९ ॥ कपिर्वाग्मी जगौ भार्यां प्रिये सोऽयं नरद्रुमः । नाप्यते नो नृभिर्दत्तं विना सल्लक्षणं नरं ॥ ४४० ॥ तमुपालक्षयन्मंत्रिकपिश्चिह्नैरनेकशः । गतेषु तेषु संस्थानं मंत्री स्वरूपमातनोत् ॥ ४४१ ॥ आख्यातं योगिनोऽग्रे च चलितौ तावुभावपि । तस्मिन्नरद्रुमे रम्ये संजातेऽभ्यर्णवर्त्तिनि ॥ ४४२ ॥ नीरेण मंत्रिणा योगी कल्पितः पृथ्वीवर्त्तिना । वृक्षाधिष्ठायकैर्देवैः स सद्यो भक्षितो रटन् ॥ ४४३ ॥ अंगरक्षोऽथ सचिवमनालोक्येत्यचिंतयत् । निन्ये कौतुकभंडारे स्वामी मे योगिना ध्रुवं ॥ ४४४ ॥ मायाविना गृहीतोऽसौ मारणायैव केवलं । पृष्ठौ यास्याम्यहमपि तत्पादौ शरणं मम ॥ ४४५ ॥ इति ध्यात्वाचलत्सोऽपि भ्रमंस्तद्वनमासदत् । धर्मकर्मानुसारेण प्राप्तवान् स्वामिनं निजं ॥ ४४६ ॥ तौ मिथो मुदितौ दोर्भ्यामाशिश्लिषतुरंजसा । अंगरक्षधनुर्लात्वा

मंत्री बाणं च संदधे ॥ ४४७ ॥ व्याघ्रवृश्चिकसर्पाणां भूतकेसरिदंतिनां । रूपैः स भापितोऽत्यर्थं मानसे न भयं दधौ ॥ ४४८ ॥ न-रदुस्कंधदेशेऽस्ति स्वयं भूतं मनोहरं । पुंस्त्रियोर्मिथुनं प्रौढं सर्वावयवसंयुतं ॥ ४४९ ॥ बाणं मुक्तं ततस्तेन तत्र नारीपयोधरे । प्रादु-र्बभूव सहसा पयःश्रोतः सुपूरभृत् ॥ ४५० ॥ तत्पीतं मंत्रिणात्यर्थं प्रीतोऽभूद्भूरिभिर्दिनैः । स्वयमेव स्थितो दुग्धप्रवाहः प्रवहन्नथ ॥ ४५१ ॥ पीतदुग्धप्रमाणेन सर्वं भूमिगतं धनं । द्राक् पश्यति स्म मंत्रींद्रः स्वाक्षिभ्यां प्रकटं यथा ॥ ४५२ ॥ इत्थमंजनसिद्धो-ऽभून्मंत्रीशो भाग्ययोगतः । सोत्साहस्तद्वनं सर्वमतिचक्राम हेलया ॥ ४५३ ॥ सांगरक्षो ययौ तूर्णं श्रावस्त्यां पुरि साहसी । पुरोप-वनसंस्थश्च केशी दृष्टो गणाधिपः ॥ ४५४ ॥ रत्नत्रयधरो धीमान् धीरो धर्मोपदेशकः । ततो मंत्र्यंगरक्षौ च समासीनौ च तत्पुरः ॥ ४५५ ॥ आख्यातं मुनिना किंचित्तदा तत्पुरतः स्फुटं । मया किंचित्तु न ज्ञातं मूर्खभावेन सुंदर! ॥ ४५६ ॥ मंत्रिपार्श्वे ततः पृष्टं सेवकेनातियत्नतः । किं ख्यातं मुनिना तेन तवाग्रे वद मे पुरः ॥ ४५७ ॥ प्रस्तावे कथयिष्यामि सर्वं ते पुरतोऽधिकं । इत्येव कथयन्नासीन्नाख्यातं किंचिदेव हि ॥ ४५८ ॥ गणभृद्बोधवाक्येन त्वं श्रीश्रेणिकमंत्र्यभूः । अज्ञातबोधवाक्यः सन्नहं वैभारपर्वते ॥ ४५९ ॥ एतत्स्वप्नमसत्यं वा सत्यं तद् ज्ञायते नहि । पुनः पृच्छां करिष्यामः श्रीवीरजिनसन्निधौ ॥ ४६० ॥ इत्युक्त्वा तेऽ-चलन् सर्वे श्रीवीरनतिहेतवे । आहूता रौहिणेयेन लोकाश्च समतात्मना ॥ ४६१ ॥ आनाय्य वैभारगिरेर्हृतं पितृपितामहैः । अर्पितं वस्तु लोकानां श्रेणिकस्य प्रपश्यतः ॥ ४६२ ॥ श्रीवीरस्वामिनं नत्वाऽभयः पप्रच्छ मंत्रिराट् । ख्यातो मे रौहिणेयेन भवः सत्योऽ-थवाऽनृतः ॥ ४६३ ॥ सत्य एव न कूटोऽयं वीरेण कथिते स्थिति । रौहिणेयोऽपि जग्राह दीक्षां श्रीवीरसन्निधौ ॥ ४६४ ॥ प्रशं-समानः सर्वोऽपि लोको निजं निजं गृहं । जगाम दुस्तपतपो रौहिणेयस्तपस्यति ॥ ४६५ ॥ श्रीवीरदेवमूर्त्तिक्रमवंदनतत्परः स चौर-



र्षिः । भविकमनांसि निरंतरमचोरयत्स्वीयविमलगुणैः ॥ ४६६ ॥ गृहीत्वानशनं प्रान्ते स्मरन् पंचनमस्कृतिं । श्रीसर्वार्थविमानेऽगा-देवोऽभूच्छर्मभाजनं ॥ ४६७ ॥ जिनेन्द्रवचनं श्रुत्वा रौहिणेय इवान्वहं । स्तैन्यं त्रिधापि सन्त्याज्यं जिनधर्मरतैर्नरैः ॥ ४६८ ॥ कासद्र(कासेंद्र)गच्छचूडारत्ननिभो देवचन्द्रगुरुराजः । तच्छिष्यदेवमूर्त्तिर्जिनपदतरुपीठकृतवसतिः॥ ४६९ ॥ चक्रे तेन कथासौ बहुलरसा स्मयकरी बुधजनानां । नन्दतु तावद्रुचिरा यावच्छशिमेरुसूर्यजलनिधयः ॥ ४७० ॥ ॥ इति श्रीकासद्रगच्छे (कासेंद्रगच्छे) श्रीदेवचंद्रसूरिशिष्यउपाध्यायश्रीदेवमूर्त्तिरचिता रौहिणेयकथा समाप्ता ॥

## मार्गानुसारिणां पंचत्रिंशद्गुणाः

न्यायसंपन्नविभवः शिष्टाचारप्रशंसकः । कुलशीलसमैस्सार्द्धं कृतोद्वाहोन्यगोत्रजैः ॥ १ ॥ पापभीरुः प्रसिद्धं च देशाचारं समाचरन् । अवर्णवादी न क्वापि राजादिषु विशेषतः ॥ २ ॥ अनतिव्यक्तगुप्ते च स्थानेषु प्रतिवेश्मिके । अनेकनिर्गमद्वारविवर्जित-निकेतनः ॥३॥ कृतसंगः सदाचारैर्मातापित्रोश्च पूजकः । त्यजन्नुपप्लुतस्थानमप्रवृत्तिश्च गर्हिते ॥ ४ ॥ व्ययमायोचितं कुर्वन् वेषं वित्तानुसारतः । अष्टभिर्धीगुणैर्युक्तः श्रृण्वानो धर्ममन्वहम् ॥ ५ ॥ अजीर्णे भोजनत्यागी काले भोक्ता च सात्म्यतः । अन्योन्या-प्रतिबंधेन त्रिवर्गमपि साधयन् ॥ ६ ॥ यथावदतिथौ साधौ दाने च प्रतिपत्तिकृत् । सदानभिनिविष्टश्च पक्षपाती गुणेषु च ॥ ७ ॥ अदेशाकालयोश्चर्यां त्यजन् जानन् बलाबलं । व्रतस्थज्ञानवृद्धानां पूजकः पोष्यपोषकः ॥८॥ दीर्घदर्शी विशेषज्ञः कृतज्ञो लोकवल्लभः । सलज्जः सदयः सौम्यः परोपकृतिकर्मठः ॥ ९ ॥ अंतरंगारिषड्वर्गपरिहारपरायणः । वशीकृतेंद्रियग्रामो गृहिधर्माय कल्पते ॥ १० ॥

## क्षेपकश्लोकाः

वैद्या वदन्ति कफपित्तमरुद्विकारं। नैमित्तिका ग्रहकृतं प्रवदन्ति दोषं। भूतोपसर्गमथ मंत्रविदो वदंति। कर्मैव शुद्धमतयो यतयो वदन्ति ॥ १ ॥ देहे द्रव्ये कुटुंबे च। सर्वसंसारिणां रतिः। जिने जिनमते संघे। पुनर्मोक्षाभिलाषिणां ॥ २ ॥ यावद्देहमिदं गदैर्न प्रदितं नो वा जराजर्जरं। यावत्त्वक्षकदंबकं स्वविषयं ज्ञानावगाहक्षमं। यावच्चायुरभंगुरं निजहिते तावद्बुधैर्यत्यतां। कासारे स्फुटिते जले प्रचलिते पालिः कथं बध्यते। ३। यावत्स्वस्थमिदं शरीरमरुजं यावच्चदूरे जरा। यावच्चेंद्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः। आत्मश्रेयसि तावदेव कृतिना कार्यः प्रयत्नो महान्। संदीप्ते भुवने हि कूपखननं प्रत्युद्यमः कीदृशः ॥ ४ ॥ आम्रे निम्बे सुतीर्थे कचवरनिचये शुक्तिमध्येऽहिवक्त्रे। औषध्यादौ विषद्रौ गुरुसरसि गिरौ पांडुभूकृष्णभूम्योः। इक्षुक्षेत्रे कषायद्रुमवनगहने मेघमुक्तं यथांभस्तद्वत् पात्रेषु दत्तं गुरुवदनभवं वाक्यमायाति पाकं ॥ ५ ॥ भार्येयं मधुराकृतिर्मम मम प्रीत्यान्वितोऽयं सुतः। स्वर्णस्यैष निधिर्महान् मम ममासौ बंधुरो बांधवः। रम्यं हर्म्यमिदं ममेत्थमनया व्यामोहितो मायया। मृत्युं पश्यसि नैव दैवहतकः क्रुद्धं पुरश्चारिणम् ॥६॥ लक्ष्मीवन्तो न जानन्ति। प्रायेण परवेदनां। शेषे धराभरक्रान्ते। शेते नारायणः सुखं ॥७॥ अयं जनः परो वेति। गणना लघुचेतसां। उदारचरितानां तु। वसुधैव कुटुंबकं ॥८॥ प्रीणाति यः सुचरितैः पितरं स पुत्रो यद्भर्तुरेव हितमिच्छति तत्कलत्रम्। तन्मित्रमापदि सुखे च समक्रियं य-देतत्रयं जगति पुण्यकृतो लभन्ते ॥९॥ बालः प्रायः क्रीडासक्तः। तरुणः प्रायो रमणीरक्तः। वृद्धः प्रायश्चिन्तामग्नः। परमे ब्रह्मणि कोऽपि न लग्नः ॥१०॥ अङ्गं गलितं पलितं मुण्डं। दशनविहीनं जातं तुण्डं। वृद्धो याति गृहीत्वा दण्डं तदपि न मुंचत्याशापिंडं ॥ ११ ॥ अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यं। पुत्रादपि धनभाजां भीतिः। सर्वत्रैषा विहिता रीतिः ॥१२॥ गात्रं सङ्कुचितं गतिर्विगलिता दन्ताश्च नाशं गता। दृष्टिर्भ्रश्यति रूपमेव ह्रसते वक्त्रं च लालायते। वाक्यं नैव करोति बांधवजनः पत्नी न शुश्रूषते। हा कष्टं जरयाभिभुतपुरुषं पुत्रोप्यवज्ञायते ॥१३॥ वलिभिर्मुखमाक्रान्तं। पलितैरंकितं शिरः। गात्राणि शिथिलायन्ते। तृष्णैका तरुणायते ॥ १४ ॥ विधाय मायां विविधैरुपायैः। परस्य ये वंचनमाचरंति। ते वंचयन्ति त्रिदिवापवर्गसुखान्महामोहसखा स्वमेव ॥ १५ ॥ औचित्यमेकमेकत्र। गुणानां कोटिरेकतः। विषायते गुणग्राम। औचित्यपरिवर्जितः ॥ १६ ॥ ईश्वरेण समं प्रीतिर्न मे लक्ष्मण रोचते। गते च गौरवं नास्ति। आगते च धनक्षयः ॥ १७ ॥ एकत्राऽसत्यजं पापं पापं निःशेषमन्यतः। द्वयोस्तुलाविधृतयोराद्यमेवातिरिच्यते ॥ १८ ॥ खलान्कापि पुरस्कृत्य स्वकार्यं साधयेद्बुधः। रसभुक् क्लेशरासिकान् रसना दशनानिव ॥१९॥ विद्यावाणिज्यविज्ञानवृद्धिऋद्धिगुणादिषु। जातौ ख्यातौ प्रोन्नतौ च धिग् धिग् धर्मेऽपि मत्सरः ॥ २० ॥ आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्द्धं गतं। तस्यार्द्धस्य कदाचिदर्द्धमधिकं वार्द्धक्यबाल्ये मतं। शेषं व्याधिवियोगशोकसहितैः सेवादिभिर्नीयते। जीवे वारितरंगचञ्चलतरे सौख्यं कुतः प्राणिनां ॥ २१ ॥ क्वचिद्वीणानादः क्वचिदपि हहाहेति रुदितं। क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहं। क्वचिद्रम्यारामा क्वचिदपि जराजर्जरतनु-र्न जाने संसारः किममृतमयः किं विषमयः ॥ २२ ॥ सगुणमपगुणं वा कुर्वता कार्यजातं। परिणतिरवधार्या यत्नतः पंडितेन। अतिरभसकृतानां कर्मणामाविपत्ते-र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ २३ ॥ चेतोहरा युवतयः सुहृदोऽनुकूलाः। सद्बांधवाः प्रणतिनम्रगिरश्च भृत्याः। वल्गंति दन्तिनिवहास्तरलास्तुरंगाः। संमीलने नयनयोर्नहि किञ्चिदस्ति ॥२४॥ सुजनोऽपि न याति विकृतिं परहितनिरतो विनाशकालेऽपि। छिन्नोऽपि हि चन्दनत-

रुः सुरभयति मुखं कुठारस्य ॥ २५ ॥ मृगमीनसज्जनानां । तृणजलसंतोषविहितवृत्तीनां । लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ २६ ॥ धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी । सत्यं सूनुरयं दया च भगिनी भ्राता मनःसंयमः । शय्या भूमितलं दिशोपि वसनं ज्ञानामृतं भोजनं । एते यस्य कुटुंबिनो वद सखे कस्माद्भयं योगिनः ॥ २७ ॥ सौख्यं मित्रकलत्रपुत्रविभवभ्रंशादिभिर्भंगुरं । कासश्वासभगंदरादिभिरिदं व्याप्तं वपुर्व्याधिभिः । भ्रातस्तूर्णमुपैति सन्निधिमसौ कालः करालाननः । कष्टं किं करवाण्यहं तदपि यच्चित्तस्य पापे रतिः ॥ २८ ॥ नो दुष्कर्म्मप्रयासो न कुयुवतिसुतस्वामिदुर्वाक्यदुःखं । राजादौ न प्रणामोऽशनवसनधनस्थानचिन्ता न चैव । ज्ञानाप्तिर्लोकपूजा प्रशमसुखरतिः प्रेत्य मोक्षाद्यवाप्तिः । श्रामण्येऽमी गुणाः स्युस्तादिह सुमतयस्तत्र यत्नं कुरुध्वम् ॥ २९ ॥ साधुभ्यः साधुदानं रिपुजनसुहृदां चोपकारान् कुरुध्वं । सौजन्यं बन्धुवर्गे निजहितमुचितं स्वामिकार्यं यथार्थं । श्रोत्रे ते तथ्यमेतत् कथयति भवतां लेखिनी भाग्यशालि-न्नो चेन्नष्टेधिकारे मम मुखसदृशं तावकास्यं भवेद्धि ॥ ३० ॥ आनंदाय न कस्य मन्मथकथा कस्य प्रिया न प्रिया । लक्ष्मीः कस्य न वल्लभा मनसि नो कस्यांगजः क्रीडति । तांबूलं न सुखाय कस्य न मतं कस्यान्नशीतोदकं । सर्वाशाद्रुमकर्त्तनैकपरशुर्मृत्युर्न चेतस्याज्जनोः ॥ ३१ ॥ वत्सास्मिन्भवचारके गुरुतराधिव्याधिदेशे स्फुरत्कर्मप्राहरिके वधाद्यमशके रागाद्ययःश्रृंखले। जीवानां वसतां कदापि न सुखं दुःखं त्वनंतं ततोर्हद्धर्मं शिवशर्मदं कुरुतरां मिथ्यात्वमुज्झाधुना ॥३२॥ शरीरं स्वरूपं तथा वा कलत्रं । धनं मेरुतुल्यं वचश्चारुचित्रं । जिनेंद्रांघ्रियुग्मे मनश्चेन्न दत्तं ततः किं ततः किं ततः किं ततः किं ॥३३॥ धर्मस्यावसरोऽस्ति पुद्गलपरावर्तैरनन्तैस्तवा-यातः संप्रति जीव हे प्रसहतो दुःखान्यनन्तान्ययम्। स्वल्पाहः पुनरेष दुर्लभतमश्चास्मिन् यतस्वार्हतो। धर्मं कर्तुमिमं विना हि नहि ते दुःखक्षयः कर्हिचित् ॥३४॥